THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS.

*No. 20*

---

THE

# MĀNSATATTVAVIVEKA

GOVERNMENT SANSKRIT LIBRARY,

BENARES



1927.

Price. 12 as.]

THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

*No. 20*

—o—

EDITED BY

GOPĪ NĀTHA KAVIRĀJA



THE

# MĀNSATATTVAVIVEKA



*Printed by Jai Krishna das Gupta*
*At the Vidya Vilas Press, Gopal Mandir Lane,*
*Benares City.*

1927

विश्वनाथन्यायपञ्चाननिर्मितः

# मांसतत्त्वविवेकः



THE

# MĀNSATATTVAVIVEKA

of

Viśvanātha Nyāyapañchānana Bhaṭṭāchārya
Edited with Introduction etc,
by
Jagannātha S'āstrī Hoshing Sāhityopādhyāya,
Sādholāl Research Scholar, Sanskrit College,
Benares,



With a Foreword
by
Pandit GOPĪNĀTHA KAVIRĀJA, M. A.,
The Principal, Government Sanskrit College,
Benares.



1927

# FOREWORD

There has been a controversy from times immemorial over the alleged evils of slaughter of animals ( for sacrificial purposes ) and of flesh-eating from the standpoint of Hindu S'āstra. Those who are accustomed to vegetarianism are inclined to non-violent attitude towards life (as exemplified in early Buddhism, Jainism, Sāṅkhya, Yoga & Vaiṣṇavism) and are fond of finding in the scriptures a general tendency in favour of their own views and interpret all the sacred texts bearing on the question in that light. The other party is naturally opposed to this position, affirming that there are undoubtedly passages in the S'āstras which refer to slaughter not only for specific ritualistic purposes but even for food.

The booklet which is herewith introduced deals with this interesting question. Its interest is further enhanced by the fact that it comes from the pen of Mahāmahopādhyāya Viśvanātha Nyāyapañchānana, the great Naiyāyika of Bengal, whose Bhāṣāparichchheda with Nyāyasiddhāntamuktāvalī has become a classical work for the study of the elements of Nyāya-S'āstra.

Viśvanātha was the son of Vidyānivāsa* Bhaṭṭāchārya and the brother of Rudra Nyāyavāchaspati† ( and Nārāyaṇa ). Vidyānivāsa was the son of Ratnākara Vidyāvāchaspati, the younger brother of

---

*His full name was probably Kāśīnātha Vidyānivāsa. Vide N. Vasu, Baṅgera Jātīya Itihāsa, Vol. I, p. 295.

† The same as the author of Bhramaradūta. He was the father of Govinda Nyāyavāgīśa, the protege of Rājā Rāghava of Krisnanagara, whose date is 1669 A. D.

the great Vāsudeva Sārvabhauma, who is believed to have been the teacher of four illustrious figures of mediaeval Bengal:viz(i) S'rī Chaitanya Deva, the religious reformer, (ii) Raghunātha S'iromaṇi, the author of Tattvachintāmaṇi dīdhiti, the great Logician who paved the way in a sense for the study of Nyāyaśāstra in Bengal, (iii) Raghunandana, the author of the 28 Smṛti Tattvas, who is still regarded as the highest authority in all matters connected with social, domestic & ritualistic law in Bengal and (iv) the great Tāntrist Kṛṣṇānanda Āgamavāgīśa, whose Tantrasāra is still the one guide book for the performance of Tantric ceremonies in Bengal.

The date of Viśvanātha is known for certain. His gloss on the Nyāya sūtras was composed at Brindavan in S'aka 1556 (रसवाणतिथि=1634 A.D.).*Mm. Haraprasāda S'āstrī has shown that the Dānakhaṇḍa of his father Vidyānivāsa was composed in S'aka 1510 (=1588 A.D.). It is said that Viśvanātha was one of the pandits who presented addresses to Sarvavidyānidhāna Kavīndrāchārya Sarasvatī on his return from Delhi after the successful agitation for the abolition of pilgrim taxes at

*Mm. Rājendra chandra S'āstrī is inclined ( Bengali Translation of Bhāṣā parichchheda and Nyāyasiddhāntamuktāvalī, Introduction, pp.1–5) to place Viśvanātha much earlier and says that in the work of the Ghaṭakas there is mention of a Viśvanatha whose genealogy is given below:—

Bhaṭṭa Nārāyaṇa ( of S'āṇḍilya Gotra )
|
Kāmadeva Vidyānivāsa ( 12th in descent )
|
Viśvanātha | Nyāyapañchānana | Kṛṣṇanatha | Harinātha | Somanātha
|
Rājīva ( childless )

Benares. The date of Kavīndrāchārya, who was a contemporary of the Moghul Emperor Shah Jehan (1627-1658 A. D.), is well known. Viśvanātha may therefore be assigned to the middle of the 17th century A, D.

Viśvanātha was the author of the following works:–

(1) Bhāṣāparichchheda, in kārikās & its Commentary, Nyāyasiddhāntamuktāvalī. It is a work on Vaiśeṣika or rather the combined system of Nyāya and Vaiśeṣika.

(2) Nyāyasūtra Vṛtti.

It is the most popular gloss on the Sūtras of Gotama.

(3) Piñgala prakāśa (Com. on Prākṛta Piṅgala).

(4) Subarthatattvāloka.

(5) Nyāyatantrabodhini.

(6) Māṁsatattvaviveka.

The present edition of Māṁsatattvaviveka is based on a single Ms. of the work (fols 1-13, 9 lines per page, 36 letters per line, 10.4″ × 4′-2″) in fair Devanāgarī script. It was once in possession of one Bāpu Āchārya *alias* Rāmakṛṣṇa Āchārya of Benares and has been recently acquired for the Government Sanskrit Library, Sarasvatī Bhavana, Benares.

Sanskrit College,
Benares.
March 17, 1927.

GOPINATH KAVIRAJ

श्रीगणेशगीर्गुरुभ्यो नमः ।

# प्रास्ताविकं किञ्चित् ।

अथैष प्रकाश्यते मांसतत्त्वविवेको नाम श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविनिर्मितो निबन्धो मुद्रापयित्वा । अत्र च ग्रन्थकृता समन्ततो वचनानि मांसभक्षणविधायकान्यनेकानि सङ्गृह्य प्रतिषेधकान्यपि कानिचिदुल्लिख्य तानि च परस्परं सङ्गमय्य स्वतन्त्रः स्वीयो विचारः सर्वेषां विदुषां पुरस्तादुपन्यस्तः । तत्र च पूर्वं मनुयाज्ञवल्क्यवचनान्युपन्यस्य तेषां प्रकरणसङ्गतिं विचार्य प्रमाणत्वेन च पैठीनसिहारीतदेवलबृहस्पतिमहाभारतमेधातिथिप्रभृतीनां प्रासङ्गिकानि वचनानि प्रदर्श्य मांसं प्रोक्षिताद्यन्यतमं चेत्सर्वथा भक्षणीयमिति साधितम् । तत्समनन्तरमेव वचनान्यमूनि शङ्कोपशङ्कादिभिः सन्दूष्य सम्भूष्य च यमकुल्लूकभट्टभवदेववाचस्पतिमिताक्षराकल्पतरुब्रह्मपुराणादिसाहाय्येन, यज्ञश्राद्धमधुपर्कप्राणात्ययब्राह्मणानुज्ञासु तद्व्यतिरेकेणापि देवपित्रर्चनभृत्यभरणावशेषे च चातुर्वर्ण्यस्य निर्विशेषं मांसभक्षणं प्रतिपादितम् । तत्र च पूजादिषु प्रसङ्गतः कूर्मवराहकालिकादिपुराणवचनानि कल्पतरुकामधेनुप्रभृतिप्रबन्धधृतानि परिदर्शितानि । तद्विरोधीनि च यज्ञीयपश्वालम्भनव्यतिरिक्तहिंसापूर्वकमांसादानप्रतिषेधकानि बृहत्पराशरादिवचनानि प्रोक्षितातिरिक्तविषयकानि प्रतिपाद्य निष्कण्टकितः स्वीयः पन्थाः । प्रस्तुत्य च कलिवर्ज्यविचारं, गवालम्भादिविषयत्वेन संयोज्य तद्वचनजातं, मध्यदेशीयस्याऽऽचारस्य सदाचारत्वेन तत्राऽन्यत्र चाऽविगीतो मांसभक्षणाचारः प्रतीयमानो निरूपितः । अन्ते च मांसश्राद्धे

विवदमानानामुपरि ब्रह्महत्यादिप्रायश्चित्तोपदेशे मातुलकन्यापरिणयने च वैमत्यं प्रदर्श्य रागरोषदूषितचित्तत्वं देवानांप्रियत्वं सौगतमतानुयायित्वं चेति प्रहारत्रयं च सम्पात्य सह चित्तशान्त्या निबन्धोऽवसानं प्रापितः ।

अत्रेदं मीमांस्यते—एष मांसभक्षणाभक्षणविवादः प्राचीनाद् बहोः कालादद्यावधि सर्वत्र प्राप्तावसरो नयनपथगोचरतामुपति । शाकादिसात्त्विकपदार्थभोजनशालिनां मांसभक्षणे सर्वथाऽरुचिरेवोत्पद्यत इति प्रकृतिधर्म एवैषः । आस्तां तावत्, 'मा हिंस्यात्सर्वा भूतानी'ति श्रुत्या हिंसा तु सर्वथा निषिद्धैव; परं 'वायव्यं श्वेतमालभेते'त्यादिश्रुत्यैव पश्वालम्भनमप्यनुमोदितम् । नच परस्परविरुद्धयोर्हिंसाऽहिंसाप्रतिपादिकयोरुभयोः श्रुत्योः कथमन्यतरस्या बलवत्त्वं, पूर्वमीमांसाशास्त्रीयनियमानुरोधेन द्वयोरपि सावकाशत्वात्, यागाद्यतिरिक्तत्वेन हिंसाया निषेधात्; यज्ञीयायाश्च कर्माङ्गत्वेन हिंसात्वाप्रतिपादनाच्च । एवं चैकमत्येन श्रुत्योरविरोधात् 'नाऽकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचि'दित्यादिवाक्यस्य यज्ञातिरिक्तत्वेन सङ्कोचात् क्रयादिप्राप्तस्य हिंसापूर्वकत्वात्तन्निषेधस्य सर्वथा समुचितत्वात् 'अनर्चितं वृथा मांस'मित्यादिना यागपूजाद्यतिरिक्तस्य मांसस्याऽनुपादेयत्वं निर्विवादमेव । यच्च भृत्यभरणावशिष्टस्य मांसस्य भक्षणार्थं पुनरुपादानं युक्त्या प्रपञ्चितं तत्तु न मनोरमं, 'कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्' 'जग्ध्वा चान्द्रायणं चरेत्' इत्यादिभक्ष्याभक्ष्यप्रकरणीययाज्ञवल्क्यवचनानुरोधेन भृत्यभरणावशिष्टकाम्यमांसोपादानस्य प्रायश्चित्तविधानेन दोषास्पदत्वात् दूषितस्य च 'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न त्वि'त्यनेन शिष्टैरनादृतत्वाच्च । अन्यच्च मृगादिहन्तृव्याधाद्यपेक्षया मांसभक्षकस्यैव विशिष्टा निन्दा शास्त्रे समुपलभ्यते । तथा च मनुः—'न तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः । यादृशं भवति प्रेत्य वृथा मांसानि खादतः' ॥

इति। वृथेति। यज्ञातिरिक्तानीत्यर्थः। एतच्च वचनं मांसभक्षणविधिप्रतिषेधान्तर्गतमपि वदतोव्याघातरूपमहादोषपातसम्भावनाभिया श्रीविश्वनाथेन समुपेक्षितम्। 'यज्ञार्थं पशवः सृष्टा' इत्यादिना 'मधुपर्के च यज्ञे च पितृदैवतकर्मणि। अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः॥ एष्वर्थेषु पशून् हिंसेद्वेदतत्त्वार्थविद् द्विजः। आत्मानं च पशुं चैव गमयत्युत्तमां गति'मित्यन्तेन च मनोरेव वचनकदम्बकेन यज्ञादावेव श्रुतिमूलत्वेनाऽऽलम्भनं भक्षणं चाऽनुमतं न त्वन्यत्र काम्यादौ, 'मां स भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम्। एतन्मांसस्य मांसत्व'मिति प्रवृत्तिपरकत्वेन क्वचिदंशेऽनुमतेऽपि सर्वथोच्छृङ्खलचेतसामन्यत्र शास्त्रेण नियन्त्रणस्याऽऽवश्यकत्वात्। अथच सर्वेषां दर्शनानामिव धर्ममीमांसयोरपि निःश्रेयसावाप्तिरूपप्रधानलक्ष्यस्यैव प्रतिपाद्यत्वं, 'निवृत्तिस्तु महाफले'ति 'सर्वान्कामानवाप्नोति हयमेधफलं तथा। गृहेऽपि निवसन् विप्रो मुनिर्मांसविवर्जना'दिति मनुयाज्ञवल्क्योक्तेः, 'अथातो धर्मजिज्ञासे'त्यादिजैमिनीयपूर्वमीमांसावाक्यसमूहाच्च।

एवं च वैदिकीं हिंसामपहाय क्रयादिप्राप्तमांसभक्षणविषये प्रमाणान्युपन्यस्यतां सतां मांसभक्षणसाधनं जिह्वालौल्यमेवोद्घोषयति। ये किल मांसादास्ते प्रकृत्या चञ्चला अपि भवन्ति नेतरे। तथाहि-मांसमदन्मृगेन्द्रः पञ्जरे सुदृढं बद्धोऽपि नैकमपि क्षणं शान्तः सन्तिष्ठते, प्रत्युत धावत्येवेतस्ततः। गोमहिषादयः पुनर्लोके धीरा इव दृश्यन्ते। इदानीन्तना आहारशास्त्र( Dietetics )विदोऽपि मांसभक्षणं सर्वथा निन्दन्ति, प्रशंसन्ति च सात्त्विकं शाकादिकमेवाऽऽहारजातम्। तस्माद्वैदिककर्माङ्गभूतालम्भनभक्षणे वर्जयित्वा निषिद्धानां तामसानां मांसादीनां पदार्थानां भक्षणं को नाम सुधीरनुमन्येतेति।

सर्वदा समुचितविचारसाहाय्यं विदधतोर्हृद्यसुहृद्वरयोः श्रीवटुकनाथशर्म, खिस्तेश्रीनारायणशास्त्रिणोः, क्वचिदंशेऽत्र संसूचयतो मित्र

वर-वेतालोपाह्वश्रीअनन्तरामशास्त्रिणश्च नामान्यनुल्लेख्य भूमिकापरिसमाप्तिरनुचितेति तेभ्यः सहर्षं धन्यवादान् वितीर्य सरस्वतीभवनसंस्कृतग्रन्थमालाप्रधानसंशोधकानां सर्वदा मय्यतुलं वात्सल्यं बिभ्रतां विशेषतश्चाऽऽङ्ग्लभाषीयोपोद्घातप्रदानपूर्वकं ग्रन्थमिमं निर्ध्यायतां पूज्यवरश्रीगोपीनाथकविराज एम्०, ए०.महोदयानां नाम सादरं स्मारंस्मारं, सश्रद्धमभिवन्द्यच श्रीमद्गुरुवरचरणकमलानि वृथापल्लवितादस्माद्विरम्यते प्रास्ताविकाल्लेखात् ।

ग्रन्थकर्तुः प्रसिद्धतयाऽऽङ्ग्लभाषीयभूमिकायां समुपन्यस्ततया च परिचयादिकं पिष्टपेषणमिव ज्ञात्वा नात्र निबद्ध्यते । आशास्यते च गुणैकपक्षपातिनः सज्जनाः शुद्धिपत्रादशुद्धीः संशोध्य ग्रन्थमेतमाद्यन्तमालोक्य सफलयेयुः परिश्रममिति शिवम् ।

सरस्वतीभवनम्, काशी.
२५-३-२७.

जगन्नाथशास्त्री होशिङ्गः

# एतस्मिन्निबन्धे समापतितानां पारिभाषिकशब्दानां विवरणम् ।

उपाकरणम् = यज्ञाङ्गत्वेन रहसि समन्त्रकं साम्प्रदायिकर्त्विगादिद्वारा-ऽशब्दं पशूनां प्राणवियोजनम् ।

परिसंख्या = अनेकत्र लब्ध्याऽलब्ध्ययोर्वा प्राप्तौ निर्णयः ।

जर्तिलाः = आरण्यास्तिलाः, यज्ञसाधनभूतास्तिलविशेषा इति यावत् ।

इडा = यज्ञीयः पिष्टपशु,पशु,चरुमयो होमावशिष्टो भक्ष्यपदार्थः ।

प्राजापत्यम् = प्रजापतिदेवतोद्देशेन यागादौ दीयमानं होमद्रव्यम् ।

अष्टकाः = मार्गशीर्षपूर्णिमोत्तरमपरपक्षीयाश्चतस्रोऽष्टम्योऽष्टका इत्यु-च्यन्ते ।



# अस्मिन् ग्रन्थे प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां ग्रन्थकाराणां च वर्णक्रमानुसारि

# सूचीपत्रम्.





# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ११ | दंष्ट्रिणां | दंष्ट्रिणां |
| २ | १३ | ०तयोऽपि— | ०तयोऽपि । |
| ३ | १ | ०स्वीकारः 'प्राण | ०स्वीकारः । 'प्राण |
| ३ | ७ | इष्यत इति । | इष्यत' इति । |
| ३ | १२ | ०रिक्तस्थले स्वय० | ०रिक्तस्थले । स्वय० |
| ३ | १२ | याश्चादि— | याच्ञादि— |
| ३ | १५ | तथा तिथिनिमित्तके । | तथाऽतिथिनिमित्तके । |
| ३ | १७ | कृतं विप्र० | कृतं ? विप्र० |
| ५ | १४ | गोऽव्यजाश्च | गोऽव्यजा एव |
| ६ | ८ | मासं | मांसं |
| ७ | १ | ङ्गात् । | ङ्गात् । |
| ७ | २ | ०षिध्यते | ०षिध्येत |
| ७ | ७८ | प्रत्यवेयातृवच० | प्रत्यवेयातृ(?)वच० |
| ७ | १० | निषेधकं | निषेधं |
| ९ | १० | नियुक्तास्तु | नियुक्तस्तु |
| ९ | ११ | भक्ष्याऽभक्ष्यप्रकरणे | भक्ष्याभक्ष्यनिरूपणे |
| १० | १ | निषेधः, 'अ | निषेधे, 'अ |
| १० | १४ | किञ्चिदशे | किञ्चिदंशे |
| ११ | ६ | निरासः । | निरासः, |
| १३ | २ | ब्रह्मचारिणा | ब्रह्मचारिणो |
| १३ | ८ | पिण्डप्रकाशनं चोक्तं तदपि | पिण्डप्राशनं चोक्तं, तदपि |
| १३ | १७ | ०वशिष्टमासं | ०वशिष्टमांसं |
| १४ | ४ | ०वशिष्टस्य विज्ञाने० | ०वशिष्टस्य भक्ष्यतां विज्ञाने० |

| | | | |
|---|---|---|---|
| १४ | ८ | पितंश्वा | पितृंश्वा |
| १४ | ८ | खादन्मासं | खादन्मांसं |
| १४ | ६ | याञ्चया | याच्ञया |
| १४ | १४ | भक्ष्यमेव, | भक्ष्यमेव । |
| १४ | १५ | वचनात् । प्रति | वचनात्प्रति |
| १५ | ७ | द्विजातित्वपुरेस्कारे० | द्विजातित्वपुरस्कारे० |
| १६ | ११ | भक्ष्यान्नपान्न | भक्ष्यान्नपान |
| १८ | ६ | 'प्रोक्षिते का गतिर्नवा,' 'अमा | प्रोक्षिते का गतिः । नवा 'अमा |
| १९ | १४ | मांसर्वजनस्य | मांसवर्जनस्य |
| २० | ४ | आमाषमामांसं | आमाषमांसं |
| २१ | ४ | नव— | न च |
| २१ | ७ | त्यर्थात् पशु० | त्यर्थात् । पशु० |
| २१ | १० | मापद्यते । | मापद्येत । |
| २१ | ११ | स्पपृमेव | स्पष्टमेव |
| २२ | ६ | मस्त्येव | मस्त्येव |
| २२ | ११ | पूर्वमांसश्राद्ध | पूर्वकमांसश्राद्ध |
| २२ | १२ | परमेवेत्युप० | परमेव । उप० |
| २३ | ६ | दक्षिणशिरस | दक्षिणशिरसं |
| २३ | ७ | ०मुखपदा | ०मुखपदां |
| २३ | १४ | लब्धश्वादिहते | लब्धे श्वादिहते |
| २५ | १० | विरोधोऽनव | विरोधः, अनव० |
| २५ | १२ | महशाकं | महाशाकं |
| २६ | १ | महपातक० | महापातक० |
| २६ | ३ | सपिण्डानयने | सपिण्डापरिणयने |

श्रीः

श्रीविश्वनाथभट्टाचार्यकृतः

# मांसतत्त्वविवेकः।

अथ मांसभक्षणविधिप्रतिषेधौ व्याख्यास्यामः ।

तत्र मनुः—

मांसस्याऽतः प्रवक्ष्यामि विधिं भक्षणवर्जने ॥
प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां च काम्यया ।
यथाविधि नियुक्तश्च प्राणानामेव चात्यये ॥
प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् ।
जङ्गमं स्थावरं चैव सर्वं प्राणस्य भोजनम् ॥
चराणामन्नमचरा दंष्ट्रिणां चाऽप्यदंष्ट्रिणः ।
अहस्ताश्च सहस्तानां शूराणां चैव भीरवः ॥
नात्ता दुष्यत्यदन्नाद्यान् प्राणिनोऽहन्यहन्यपि ।
धात्रैव सृष्टा ह्याद्याश्च प्राणिनोऽत्तार एव च ॥

यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः ।
अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते ॥
क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा ।
देवान् पितॄंश्चाऽर्चयित्वा खादन्मांसं न दुष्यति ॥
नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः ।
जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः ॥
नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥
असंस्कृतान् पशून्मन्त्रैर्नाद्याद्विप्रः कथञ्चन ।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥

अत इत्यनेन वर्णचतुष्टयसाधारण्येन मांसभक्षणवर्जनप्रकरणमारभ्यत इत्युक्तम् । एवं मेधातिथिप्रभृतयोऽपि——

अतः शृणुध्वं मांसस्य विधिं भक्षणवर्जने ।

इति याज्ञवल्कीयेऽप्यतःशब्देऽमुमेवार्थं विज्ञानेश्वरो व्याचख्यौ । अप्रोक्षितस्यापि भक्षणाभ्यनुज्ञानार्थं 'ब्राह्मणानां च काम्यया' इत्यादि । नियुक्तः श्राद्धादौ

निमन्त्रितः कृतस्वीकारः 'प्राणानामेव चात्यये' इति रोगादौ न भक्ष्याभावे। यदि मांसभक्षणमन्तरेण प्राणवियोगः संभाव्यते तदाऽवश्यं भुञ्जीतेत्यर्थः । 'सर्वत एवाऽऽत्मानं गोपायीत' इति श्रुतिमूलकं चेदम्। अत च देवाद्यर्चनमपि नापेक्षितमिति मेधातिथिः । अधिकं च तेनोक्तम्—'न केवलमुत्पन्नस्य व्याधेर्निवृत्त्यर्थं किन्तु दुर्बलादीनां पुष्ट्यर्थं सर्वकालं मांसाशनं नियमत इष्यत इति । 'प्राणस्यान्नम्' इत्यादिश्लोकत्रयं 'प्राणानामेव चात्यये' इत्यस्याऽर्थवादः । 'प्रोक्षितं भक्षयेत्' इत्यस्याऽर्थवादो 'यज्ञाय' इत्यादि । अन्यथा लोभादिना 'राक्षसो विधिः' इति निन्दापि ततः स्तुतौ पर्यवसन्ना । क्रीत्वेति सूनाव्यतिरिक्तस्थले स्वयमुत्पादनं ब्राह्मणस्य याञ्चादिना, क्षत्रियस्य मृगयादिना । श्राद्धादौ निमन्त्रितस्याऽभोजने निन्दामाह 'नियुक्त' इति । पैठीनसिः—

श्राद्धे तु मांसमश्नीयात्तथा तिथिनिमित्तके ।

बृहस्पतिः—

रोगी नियुक्तो विधिना कृतं विप्रवृतस्तथा ।
मांसमद्याच्चतुर्द्धैषा परिसंख्या प्रदर्शिता ॥

अतोऽन्यथा तु योऽश्नीयाद्विधिं हित्वा पिशाचवत् ।
यावन्ति पशुरोमाणि तावत्प्राप्नोति मारणम् ॥

हारीतः—

वृथा मांसमभक्ष्यं तु प्राश्य कृच्छ्रं चरेद् बुधः ।
काम्यया ब्राह्मणानां तु यथाकामं समश्नुयात् ॥

देवलः—

भक्षयन्नपि मांसानि शेषभोजी न लिप्यते ।
औषधार्थमशक्तौ वा नियोगाद्यज्ञकारणात् ॥

महाभारते—

प्रजानां हितकामेन त्वगस्त्येन महात्मना ।
आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः ॥

इति प्रोक्षितत्वकथनं तत्कार्यकारित्वबोधनाय, तेन तेषां भक्षणमविरुद्धमेव ॥

ननूक्तवचनानां साधारण्येऽपि अप्रोक्षितं ब्राह्मणेन न भक्षणीयम् । तथा च मनुः—

असंस्कृतान् पशून्मन्त्रैर्नाद्याद्विप्रः कथञ्चन ।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥

इति, मैवं पूर्वार्द्धस्य प्रोक्षितभक्षणस्तावकत्वात्। 'अनाहुतिर्वै जर्तिला' इत्यस्य पयोहोमस्तावकत्ववत्। अन्यथा श्राद्धेऽपि भक्षणानापत्तेः पूर्वोक्तविरोधः स्यात्।

यथा मनुः—

पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः।
तदामिषेण कर्तव्यं प्रशस्तेन प्रयत्नतः॥
तत्र ये भोजनीयाः स्युर्ये च वर्ज्या द्विजोत्तमाः।
यावन्तश्चैव यैश्चान्नैस्तत्प्रवक्ष्याम्यशेषतः॥

इत्युक्त्वा—

द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु।

इत्यादिना गुणफलार्थं मांसविशेषा अपि दर्शिताः। एवं 'नियुक्तस्तु यथान्यायम्' इत्यपि स्मर्तव्यम्। किञ्चैवं मत्स्यानां पक्षिणां च भक्षणं सिद्धमेव। पशवोऽप्यत्र गोऽव्यजाश्च, तेषामेव संस्कारप्रसक्तेः। अन्ये तु नियमाभिप्रायेणोक्तमनुवचनं योजयन्ति। तथा हि—शाश्वतं नित्यं वैदिकमित्यर्थः। आस्थित आश्रित इति

मेधातिथिव्याख्यानात् 'अयज्ञीयं मांसं न भक्षणीयं मया' इति नियमो येन कृतस्तत्परत्वं स्पष्टम् । तथा च यमः—

प्रोक्षितं भक्षयेन्मांसं सकृद् ब्राह्मणकाम्यया ।
दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत् ॥

'नियमे तु' इति प्रोक्षिताऽतिरिक्तपरं तद्भक्षणे यागानिष्पत्तेरित्याहुः । यच्चैकादशाध्याये सुरापानप्रायश्चित्तप्रकरणे—

यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् ।
तद् ब्राह्मणेन नाऽत्तव्यं देवानामश्नता हविः ॥

इति मनुवचनं, तत्र पञ्चमाध्यायोक्तमांसनिन्दानुवादो दृष्टान्तार्थमुपन्यस्तः । 'ब्राह्मणेन नात्तव्यम्' इत्यत्र ब्राह्मणपदमेकदेशानुवादमात्रम्, 'एकं वृणीत' इत्यादिवत् । न वा सुराया अपीदं निषेधकम् ।

तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ।

इति पूर्वमेव निषेधादतो निन्दामात्रपरमिदं वचनम् । न वाऽनया निषेधान्तरं कल्पयितुं युक्तमतिप्रस-

ङ्गात् । तथा हि मांससामान्यं ब्राह्मणसामान्यस्य निषिध्यते तद्विशेषस्य वा । आद्ये प्रोक्षितमपि द्वैवार्षिकादेरपि निषिध्यताम् । निषिध्यत एव, किन्तु प्रोक्षितभक्षणबोधकश्रुतिस्मृतिभ्यां बाध्यत इति चेत्तर्हि एकवाक्यतयाऽप्रोक्षितं न भक्षणीयमिति प्राप्तम् । तच्च—

असंस्कृतान् पशून्मन्त्रैर्नाद्याद्विप्रः कथञ्चन ।

इत्युक्तमेवाऽधस्तात् । किञ्च द्वैवार्षिकेऽपि प्रत्यवेयात्त्वचनान्तरात्तस्य बाध इति चेत् 'देवान् पितॄन् समभ्यर्च्य' इत्यादिनाऽपि कथं न बाधः । तत् सामान्यवचनं क्षत्रियादिकमादाय चरितार्थं ब्राह्मणस्य निषेधकं नाक्रामतीति चेत्तर्हि—

ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च ।
चरेद् गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये ॥
अतो न्यूनतरस्याऽस्य नाऽपराधो न पातकम् ।

इत्यादिकमपि क्षत्रियादिपरं स्यात् । न चैवं सुरापाननिषेधोऽपि द्वैवार्षिकादिब्राह्मणादेर्न स्यादिति वाच्यम्, इष्टापत्तेरिति कल्पतरुः ।

सुरापाननिषेधोऽयं जात्याश्रय इति स्थितिः ।

इति वचनात्तस्यापि निषेध इति भवदेवप्रभृतयः। तस्मात्सामान्यवचनमपि ब्राह्मणगोचरनिषेधमाक्रामतीति 'देवान् पितॄन्' इत्यादावपि तुल्यम् । अन्यथा 'देवान् पितॄन्' इत्यादिकं क्षत्रियादिपरमपि न स्यात् । 'अनुपाकृतमांसानि' इति द्विजातित्वपुरस्कारेण मनुना निषेधात् । याज्ञवल्क्येन च द्विजातित्वपुरस्कारेण मत्स्यादीनां भक्ष्यत्वोक्तेश्च विरोधो दुष्परिहारः स्यात् । अथाऽप्रोक्षितमांसं पञ्चवर्षाधिकब्राह्मणस्य निषिध्यत इति चेन्न, श्राद्धेऽपि भक्षणानापत्तेः । न चैवमेवाऽस्त्विति वाच्यं, तस्य विहितत्वात् । श्राद्धाङ्गप्रतिपत्तिपरं तद्वाक्यं न भोक्तुदोषं प्रतिप्रसोतुमीष्ट इति चेत्तर्हि ऋत्विजामपि प्रत्यवायापत्तेः । ऋत्विजां भक्षणविधायकेन 'यजमानपञ्चमा इडां भक्षयन्ति' इत्यनेन इष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वं च बोधितमतो न दोष इति चेन्न, तेन हि यजमानस्येष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वं च बोध्यते न तु ऋत्विजाम् । सत्यमेवं तथापि 'असंस्कृतान् पशून्'

इति वचनमेवर्त्विजां भोजनं प्रतिप्रसौतीति चेन्न, यजमानभोजनपरत्वेनैवोपपत्तेः कल्पनान्तराऽनवकाशात् । अन्यथा उदासीनोऽपि तद्भुञ्जानो न प्रत्यवेयात् । किञ्च—

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।

इति न प्रतिपत्तिपरं प्रागेव तत्प्रतिपादनात् ।

केतितस्तु यथान्यायं हव्यकव्यैर्द्विजोत्तमः ।
कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत् ॥

इत्यस्य तृतीयाध्याये श्राद्धप्रकरणे विधानात् तत्परत्वं वक्तुमपि युज्यते । 'नियुक्तास्तु' इति वचनं तु पञ्चमाध्याये भक्ष्याऽभक्ष्यप्रकरणेऽभिहितम् । अत एव कुल्लूकभट्टाः—'श्राद्धे मधुपर्के च नियुक्तः सन् यो न खादति स मृतः सन्नेकविंशतिजन्मानि पशुर्भवति' । इदं च 'यथाविधि नियुक्तस्तु' इत्येतन्नियमातिक्रमफलकथनमिति व्याख्यातवन्तः । श्राद्धे निमन्त्रितो नियमतो मांसं भक्षयेदभक्षणे 'नियुक्तस्तु यथान्यायम्' इति दोषश्रवणादिति मिताक्षरा । यदि च सामान्यत एव ब्राह्म-

णस्य मांसनिषेधः, 'असंस्कृतान् पशून्मन्त्रैः' इति प्रतिप्रसवादृत्विजां भक्षणमनुज्ञायत इत्युच्यते तदा यजमानस्य ब्राह्मणस्य भक्षणं न स्यात्। श्रुतिप्राप्तर्त्विग्भक्षणे दोषाभावानुवादेनैव स्मृतेः पर्यवसानात्, ज्योतिष्टोमादेः क्षत्रियादिकमादाय चरितार्थत्वात्। स्मृत्या कथं श्रुतिः सङ्कोच्येति चेत्तर्ह्यधीतवेदपतितस्याऽप्यधिकारः स्यात् स्मृत्यैव तस्य सर्वधर्मबहिष्कृतत्वोक्तेः। एवमष्टकादाववपि ब्राह्मणस्य मांसं न स्यात्। किञ्च यदि 'असंस्कृतान् पशून्मन्त्रैः' इति प्रतिप्रसवादृत्विजां मांसभक्षणं, तदा कपिञ्जलादीनां भक्षणं न स्यात् प्रतिप्रसवाभावात्। वस्तुतस्तु 'तद् ब्राह्मणेन नात्तव्यम्' इत्यत्र तत्पदेन मद्यमेव परामृश्यते। तच्च त्रिविधसुराभिन्नं पानसादि तन्निषेधे वचनस्य सार्थकत्वम्, अन्यथा सर्वेषां निषेधे तानि नात्तव्यानीत्युक्तं स्यात्। किञ्चिदंशे निषेधः किञ्चिदंशेऽनुवाद इति वैरूप्यं च वाक्यभेदश्च स्यात्। न चाऽश्रूयमाणविशेषत्वात्तत्पदेन सर्वेषामेव परामर्शान्न वाक्यभेदः। अत एव—'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यं हविः' इत्यत्र तत्प-

देन पूर्वोक्तसर्वपरामर्श इति वाच्यं, तत्र समासनिविष्टतत्पदस्य बहुवचनान्तत्वात् । कथमन्यथा न दक्षिणाधिकरणविरोधस्तत्र हि—'गौश्च अश्वश्च अश्वतरश्च गर्दभश्च अजाश्च अवयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इत्यत्र तस्येत्येकवचनश्रुतेरजादीनां निरासः । तथा च गवादीनां परामर्शस्तत्राऽपि एकवचनान्तत्वान्न चतुर्णां परामर्शः । किन्त्वेकजातीयस्य तत्रापि मुख्यत्वात् गवां निर्देश इति तन्त्ररत्नम्, तन्न स्यात्तत्रापि सर्वपरामर्शप्रसङ्गात् । न च तत्र महाभ्युदयहेतुत्वादेव गोर्ग्रहणमिति वाच्यम्, एकतरपरिग्रहनिष्टङ्कने हि विनिगमिका सा युक्तिः । न चैकतरनिष्टङ्कनमुक्तातिरिक्तप्रकारेण संभवति । किंच तत्र गोरेव वाक्यार्थप्रवेशादश्वश्चेत्यादीन्यनन्वितान्येव तिष्ठन्ति । अतस्तत्र 'एतानि द्रव्याणि दक्षिणा' इत्यध्याहारेण दक्षिणा इत्यस्याऽनुषङ्गेण वाऽन्वयः क्रियते । एतावदप्येकवचनान्ततत्पदानुरोधात् सह्यते । प्रकृते तु नाऽध्याहारादिकमप्यस्ति 'यक्षरक्षःपिशाचान्नम्' इत्यनेनैव सर्वान्वयात् । तदेवमेकतरान्वये प्रसक्ते स्त्रीलि-

ङ्गतापत्त्याऽनुवादत्वापत्त्या च सुराया अपरामर्शे वक्ष्यमाणयुक्त्या आसवस्यापि तथात्वे द्वयोरन्यतरपरामर्शप्रसक्तौ मांसनिषेधेऽनुवादत्वापत्त्या महादोषसाधनत्वात् प्रथमोपस्थितत्वात् प्रकरणानुरोधाच्च मद्यमेव तत्पदेन परामृश्यत इत्येव युक्तम् । न च तदिति हेतौ । तथापि नात्तव्यमित्यस्य विशेष्याकाङ्क्षायां पूर्वोक्तयुक्त्या मद्यस्यैव तथात्वात् ।

यत्तदाद्युपबन्धेन विधिशक्तिः प्रणश्यति ।

इति न्यायादर्थवादत्वापत्तेश्च । अत एव द्वितीयश्लोके—

अमेध्ये वा पतेन्मत्तो वैदिकं वाऽप्युदाहरेत् ।
अकार्यमन्यत्कुर्याद्वा ब्राह्मणो मदमोहितः ॥

इति मद्यं निन्द्यते । न चासव एव निषिध्यताम्, आसवस्य सुराया एवाऽवस्थाविशेषस्योपादानं 'गोबलीवर्द'न्यायेनेति मेधातिथिव्याख्यानात्तन्निषेधस्याऽवक्तव्यत्वात् । तथात्वे वा तदिति पदं विरुध्येत पुंल्लिङ्गत्वापत्तेः । सुरासवमिति च समाहारद्वन्द्वः । उक्त-

व्याख्यानाऽनादरे तत्पदमनर्थकमेवापद्यते । अत एव च ब्रह्मचारिणा मांसनिषेधे प्रोक्षिताद्यपीति व्याख्यातं मेधातिथिना । अजाद्यपीति विज्ञानेश्वरेण । अन्यथाऽधिकदोषार्थमिदमित्युक्तं स्यात् । ब्राह्मणस्य सामान्यत एव निषेधात् क्षत्रियब्रह्मचारिपरमिदमिति व्याख्यातं स्यात् । कथं वा मनुना ब्राह्मणमधिकृत्य मांसश्राद्धमुक्तम् । स्मृत्यन्तरेषु च सर्वस्मात् प्रकृतादन्नात् पिण्डदानमुक्तं पिण्डशेषप्रकाशनं चोक्तं तदपि विरुद्धचेत । भवदेवभट्टवाचस्पतिमिश्रादयस्तु 'यक्षरक्षःपिशाचान्नम्' इत्यत्र मांसपदमाममांसपरं तस्यैव पिशाचादिभक्ष्यत्वेन प्रसिद्धेरित्याहुः । कुल्लूकभट्टास्तु तत्र मांसपदं प्रतिषिद्धमांसपरमिति व्याचक्रुः । अन्ये तु तत्र द्विवार्षिकाद्यनुरोधेन ब्राह्मणपदसङ्कोचावश्यकत्वे यतिपरमेवाऽस्तु ।

न भक्ष्यं यतिना मांसं कदापि च मुमूर्षता ।

इति ब्रह्मपुराणात् । ब्रह्मचारिपरं वा, तस्यापि सर्वथा निषेधादित्याहुः । एवं भृत्यभरणावशिष्टमासं भ-

क्ष्यमाह मनुः—

यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः ।
भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत् पुरा ॥

एतस्मादेव वचनाद्भृत्यभरणावशिष्टस्य विज्ञानेश्वरोऽपि दर्शितवान् । ब्राह्मणैरिति कण्ठरवेणैवोक्तम् । एवम्—

क्रीत्वा स्वयं वाऽप्युत्पाद्य परोपकृतमेव वा ।
देवान् पितॄंश्चाऽर्चयित्वा खादन्मांसं न दुष्यति ॥

इत्यत्र स्वयमुत्पाद्य ब्राह्मणो याच्ञया क्षत्रियो मृगयाकर्मणेति द्वितीय इव वेधा मेधातिथिर्व्याचख्यौ । तेनाऽयज्ञेऽपि भक्षणं ब्राह्मणस्य तदनुमतमेव । तस्मात् यज्ञे श्राद्धे मधुपर्के प्राणात्यये ब्राह्मणाज्ञायां च भोक्तव्यं तद्व्यतिरेकेणाऽपि भृत्यभरणावशिष्टं देवपित्रर्चनावशिष्टं च चतुर्णामपि वर्णानामविशेषेण भक्ष्यमेव, 'विवाहे पुनर्भोक्तव्यम्' इति वचनात्। प्रतिषेधाप्रवृत्तिर्विवाहे गम्यत इति मेधातिथिः । एवं—

पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ।
राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः ॥

इति मनुवचने सर्वशःपदाद्व्यकव्याभ्यामन्यत्रा-ऽपि आन्वाहिकभोजने प्रवृत्तिरनुज्ञायत इति मेधातिथिः । इदमपि ब्राह्मणादिसाधारणम् ।

भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्यकाः ।
शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥
तथा पाठीनराजीवसशल्काश्च द्विजातिभिः ।

इति याज्ञवल्क्येन द्विजातित्वपुरस्कारेणाऽभिधानानात् । अत्र खड्गमांसमपि मनुना दर्शितम्—

श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुः—

इति । 'खड्गे तु विवदन्ते' इति वसिष्ठस्मृतिः श्राद्धं विनाऽभक्ष्यत्वबोधनाय श्राद्धे प्राशस्त्यप्रतिपादनादिति मिताक्षरा । इदं तु बोध्यम्—'देवान् पितॄंश्चार्चयित्वा' इत्यनेन श्राद्धशेषस्याऽष्टकास्वष्टकावशिष्टस्य देवपूजावशिष्टस्य च भोजनमभ्यनुज्ञायते न तु श्राद्धशेष-

मात्रपरं, सङ्कोचे मानाभावात् । अत एव कौर्मे—

मत्स्यान् सशल्कान् भुञ्जीत मांसं रौरवमेव च ।
निवेद्य देवताभ्यश्च ब्राह्मणेभ्यश्च नान्यदा ॥

इति देवादिपूजानन्तरं भक्ष्यत्वमुक्तम्, अन्यथा—

गव्यं कृसरपूपानि पायसं मधुसर्पिषी ।
वृथामांसं च नाऽश्नीयात् पितृदेवविवर्जितम् ॥

इति देव?पुराणात् घृतादीनामपि श्राद्धं विनाऽभक्ष्यत्वं स्यात् । देवपूजायां मांसदाने कल्पतरुकामधेनुपारिजातरत्नाकरादिलिखितवचनानि । यथा सूर्यपूजायां भविष्यपुराणे—

भक्ष्यान्नपानमांसानि फलानि च निवेदयेत् ।

शिवपूजायां स्कान्दे—

अशेषफलदानेन यत्फलं परिकीर्तितम् ।
तत्फलं प्राप्नुयान्नित्यं सर्वं मांसनिवेदनात् ॥

वाराहे विष्णुवाक्यम्—

खड्गमांसं तथा छागं शाशं समुपयुज्यते ।
एतानि मे प्रियाणि स्युः प्रयोज्यानि वसुन्धरे ! ॥

कर्म्मण्यं रौरवं मांसं मायूरं कौक्कुटं तथा ।

मायूरं तृणमयूरभवं, कौक्कुटं वनकुक्कुटभवम्, इतरस्याऽभक्ष्यत्वादिति निबन्धकारः ।

लावकं वार्तिकं चैव प्रशस्तश्च कपिञ्जलः ।
वेणुकः पार्श्वकश्चैव पितॄणां प्रवरः प्रियः ॥
पञ्चभूनकमांसं च जीवञ्जीवस्य पक्षिणः ।
सम्प्रदद्याच्च मैष्यं च नीलपत्रं तथैव च ॥
गिरिवर्त्तिकामेध्यं च कपोता वत्सपक्षिणः ।
एते चाऽन्ये च बहवः शतशोऽथ सहस्रशः ॥
शकुनेर्योनयः शस्ता ये मया परिकीर्तिताः ।

एवं याज्ञवल्कीयविनायकशान्तावम्बिकापूजायां 'मत्स्यान् पक्कांस्तथैवाऽऽमान्' इति । दुर्गापूजायां कालिकापुराणे—

अन्नानि चैव पानानि मांसानि च निवेदयेत् ।

भवदेवभट्टास्तु—अनिषिद्धमत्स्यमांसभक्षणे दोषाभावात् प्रायश्चित्ताभाव एव । यानि च वृथा मांसनिन्दापराणि, यानि च प्रोक्षितदेवपित्रर्चनशेषभक्षणाभ्यनु-

ज्ञापराणि तानि पर्वाभिप्रायेणेति वदन्ति। युज्यते चैतत्। कथमन्यथा——

चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा।
पर्वाण्येतानि राजेन्द्र! रविसङ्क्रान्तिरेव च॥
स्त्रीतैलमांससंभोगी पर्वस्वेतेषु वै पुमान्।
विण्मूत्रभोजनं नाम नरकं प्रतिपद्यते॥

इति विष्णुपुराणीयनिषेधो यागश्राद्धादावपि भोजनं नाक्रामति। अमावास्याऽष्टकादौ विशिष्यमांसविधानान्न दोष इति चेत्तर्हि 'प्रोक्षिते का गतिर्नेवा,' 'अमावास्यायां श्राद्धकर्ता श्राद्धभोक्ता च मांसं भुञ्जीत' इति वाक्यान्तरं कल्पयितुं युक्तम्, उक्तसामान्यवचनैरेव निर्वाहात्। अन्यथा प्राणात्यये पर्वणि भोजनापत्तेरिति तेषामाशयं वर्णयन्ति। माधवाचार्यास्तु हिंसां विनाऽनिषिद्धमांसभक्षणे न दोषं मन्यन्ते। तथा चाहुः—'विशेषनिषेधबलात्तत्तन्मांसभक्षणे प्रत्यवायो नेतरत्रेत्यवगम्यते'। अत एवोक्तं मनुना—'न मांसभक्षणे

दोषः' इति । यत्तु तेनैवोक्तम्—

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥
समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् ॥

इति । यच्च याज्ञवल्क्येनोक्तम्—

वसेत्स नरके घोरे दिनानि पशुरोमभिः ।
संमितानि दुराचारो यो हन्त्यविधिना पशून् ॥

इति, तन्निषिद्धप्राणिहिंसापूर्वकमांसभक्षणविषयं, न तु क्रयादिप्राप्तमांसभक्षणविषयम् । प्राणिवधनिन्दापूर्वकमेव मांसभक्षणनिषेधस्मरणात् । यच्च मनुनैवोक्तम्—

फलमूलाशनैर्मेध्यैर्मुन्यन्नानां च भक्षणैः ।
न तत्फलमवाप्नोति यन्मांसपरिवर्जनात् ॥

इति, तत्र मांसवर्जनस्य महाफलसाधनत्वं प्रोक्षणादिव्यतिरिक्तविषयम् । अत एवोक्तं तेनैव—

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणस्य च काम्यया ।
यथाविधि नियुक्तश्च प्राणानामेव चात्यये ॥

इति । एतन्मते त्यक्तमांसस्य प्रतिप्रसवरूपं 'प्रोक्षितं भक्षयेन्मांसम्' इत्यादि । न च 'नियमे च विवर्जयेत्' इति पूर्वलिखितयमवचनाविरोध इति वाच्यं नियमशब्दस्य व्रतवाचित्वात् । 'आमाषमामांसं बहुसर्पिष्कं व्रतयति' इत्यादौ मांसं ब्राह्मणकामनादावपि न भोक्तव्यमित्यर्थस्य सुवचत्वात् । यच्च ब्रह्मपुराणे—

ब्राह्मणानुज्ञया भक्ष्यं त्यक्तं मांसं च रोगिभिः ।
मातापितृभ्यां संभुक्तं शेषं वा ब्रह्मचारिणा ॥
पुनः प्रशान्तरोगेण कर्तव्यमाधिकं व्रतम् ।

इति, तत्राऽधिकव्रतकरणं ब्रह्मचारिण एवेति । यच्च 'श्राद्धे मांसं तथा मधु' इति कलिवर्ज्येषु दर्शितमतः श्राद्धे मांसदानं भक्षणं च न कार्यमिति वदन्ति, तस्य भोजदेवकल्पतरुकामधेनुपारिजातरत्नाकरस्मृतिमञ्जरीप्रभृतिषु प्राच्यदाक्षिणात्यप्राचीननिबन्धेषु अलिखितस्य प्रामाण्ये देवार्चनशेषादिभोजनं पूर्वोक्तं सर्वमविवादमेव । किञ्च मांसदानमत्र हिंसापूर्वकमेव वर्ज्यम् ।

वरातिथिपितृभ्यश्च पशूपाकरणक्रिया ।

इति आचारमाधवीयलिखितवचनानुसारात् । अन्यथा मांसदानाप्रसक्तेरुपाकरणनिषेधो ऽव्यर्थ एव स्यात् । पित्रर्थमुपाकरणं तु कस्याञ्चिच्छाखायां प्रसिद्धम् । नव-वरार्थमतिथ्यर्थं वोपकरणं न प्रसक्तं कथं प्रतिषिध्यतामिति वाच्यम्, वरातिथ्यर्थं पशुः पित्रर्थमुपाकरणक्रियेत्यर्थात् पशुशब्दाच्च प्रमापणीयः पशुर्बोध्यते । 'गोपशुश्च सुराग्रहः' इत्यादौ 'कौरव्याः पशवः' इत्यादौ च तथैव दर्शनात् । उपाकरणशब्दश्च मन्त्रवत् पशुहिंसाविशेषवाचीत्यत उपाकरणे पशुविशेषणमनर्थकमापद्यते । अपि च हिंसापूर्वकमांसदाननिषेधः स्पष्टमेव निष्टङ्कितो बृहत्पराशरेण । यथा—

शौचं पात्रविशुद्धिश्च श्रद्धा च परमा यदि ।
अनन्ततृप्तिकृच्छ्राद्धेष्वेतत् खलु न चाऽऽमिषम् ॥

एतन्मुन्यन्नादि ।

यस्तु प्राणिवधं कृत्वा मांसेन तर्पयेत् पितॄन् ।
सोऽविद्वांश्चन्दनं दग्ध्वा कुर्यादङ्गारविक्रयम् ॥

क्षिप्त्वा पङ्के यथा किञ्चिद्बालः प्राप्तुं तदिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥

ननु प्रथमश्लोके 'न चामिषम्' इत्युपक्रमादन्तेऽपि 'मांसेन श्राद्धकृत्' इत्युपसंहारात् मध्यस्थप्राणिवधनिन्दापि मांसनिन्दापर्यवसन्नैवेति चेन्न, अनवबोधात् । प्रथमश्लोकेन हि मांसमनन्ततृप्तिकृन्न भवतीत्यर्थः स्पष्ट एव । न चैतावता निषेध आयाति स्वल्पतृप्तिकराणामपि दानस्य सर्वसिद्धत्वात् । यद्यपि खड्गमांसादेरनन्ततृप्तिजनकत्वमस्त्येव तथापि तद्भिन्नमांसपरमिदं कलिपरं वा । इत्थं च 'प्राणिवधं कृत्वा' इत्युपक्रमात् । 'मांसेन श्राद्धकृत्' इत्यपि प्राणिवधपूर्वमांसश्राद्धनिन्दापरमेवेत्युपक्रमवाक्यस्याऽसञ्जातविरोधितया बलवत्त्वात् । न च श्राद्धादौ हिंसाया न प्रसक्तिरिति वाच्यम्, 'अथैनामुत्सृप्य उत्तरस्यां दिशि नीत्वा

(१) अथैनामुदगुत्सृप्य संज्ञपयन्ति,[२५] प्राक्शिरसमुदक्पदीं देवदैवत्ये,[२६] दक्षिणाशिरसं प्रत्यक्पदीं पितृदैवत्ये,[२७] इति चन्द्रकान्तमहोदयसम्पादिते पुस्तके Dr. Knauerमहाशयसम्पादिते शर्मण्यदेशीयानुवादयुते च पुस्तके पाठः ।

संज्ञपयन्ति' 'प्राक्शिरसमुत्तरपदीं देवदैवत्ये' 'दक्षिणशिरसं प्रत्यक्पदीं पितृदैवत्ये' इति गोभिलसूत्रे हिंसाया उक्तत्वात् । व्याख्यातं च तद्भट्टभाष्ये—'पितॄनुद्दिश्य यत्कर्म तत्पितृदैवत्यं तस्मिन् पितृदैवत्ये, श्रोत्रियेऽभ्यागते श्राद्धे महोक्षेण महाजेन वा पयस्विन्या वा दद्यात्' इत्येवमादौ दक्षिणशिरसं दक्षिणशिरस्कां प्रत्यक्पदीं प्रत्यङ्मुखपदां संज्ञपयन्तीत्यनुवर्तत इति ।

इत्थं च हिंसापूर्वकमांसदाननिषेधात् 'क्रीत्वा स्वयं वाप्युत्पाद्य' इति मनूक्तप्रकारो न विरुद्धः । न च—

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥

इति मनुवचनात् क्रयोऽपि हिंसैवेति वाच्यं, भक्षणार्थक्रयस्यैव हिंसात्वात् । अन्यथा क्रीत्वेत्यादेर्निर्विषयत्वं स्यात् । याच्ञादिना लब्धश्वादिहते दोषाभावाच्च । यद्यपीदं सामान्यवचनं तथापि हिंसाविधायकबहुतरवचनविरोधादेतस्य कलिपरत्वमिति पृथ्वीच-

न्द्रोदयः । यच्च—

न दद्यादामिषं श्राद्धे न चाऽद्याद्धर्मतत्त्ववित् ।
मुन्यन्नैः स्यात् परा प्रीतिर्यथा न पशुहिंसया ॥

इति भागवतवचनं, तद्भागवतपरम् । उक्तं हि- मोक्षधर्मे नारायणीये—

धर्मज्ञानेन चैतेन सुप्रयुक्तेन कर्मणा ।
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥

इत्थं च नाऽद्यादित्यभोजनसङ्कल्पो विधीयते । 'नेक्षेतोद्यन्तमादित्यम्' इतिवत् । इत्थं च स्वयं भोजनाभावाच्छ्राद्धशेषभोजनाभावाच्छ्राद्धेऽपि तेन मांसं न देयमित्यर्थसिद्धम् । हिंसापूर्वकं न देयमिति वा, 'न तथा पशुहिंसया' इति वाक्यशेषात्त्यक्तमांसपरं वा । अत एव द्वितीयश्लोके—

नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् ।
न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः ॥

इति हिंसात्यागो दर्शितः । तस्मादुक्तकलिवर्ज्य-

वचनं प्रमाणयतां मतेऽपि हिंसाव्यतिरेकेण श्राद्धेऽपि मांसदानमविरुद्धमेवेति सिद्धम् ।

ननु तथापि श्राद्धे मांसदानं न ब्राह्मणस्य। तथा हि—

मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधु प्रधानं शूद्रस्य सर्वेषां चाऽविरोधि यत् ॥

इति पुलस्त्यवचनादिति चेन्न, अनेन मुन्यन्नादीनां प्राधान्यमात्रं बोध्यते न तु मुन्यन्नं ब्राह्मणस्यैव दातव्यमिति नियम्यते प्रधानप्रदानुषङ्गेणैवोपपत्तौ कल्पनान्तरानवकाशात् । न च पुलस्त्योक्ता व्यवस्था दर्शितेति विज्ञानेश्वरवचनविरोधोऽनवबोधात् । तथा हि-

खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ।
लोहामिषं महशाकं मांसं वाध्रीणसस्य च ॥
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।

इति यदनन्तफलकत्वं पूर्वमुक्तं, तत्र मुन्यन्नं ब्राह्मणस्याऽनन्तफलकमिति क्रमेण व्यवस्थेत्यर्थः । अत एव मुन्यन्नं यन्नीवारादि श्राद्धयोग्यमुक्तं तद् ब्राह्मणस्य प्रधानं समग्रफलदमिति तेनैव व्याख्यातम् । अन्यथा

'विप्रश्चन्द्रक्षयेऽग्निमान्' इत्युपक्रम्य—

तदामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः।
गुणांश्च सूपशाकाद्यान् पयो दधि घृतं मधु॥
भक्ष्यं भोज्यं च विविधं मूलानि च फलानि च।
हृद्यानि चैव मांसानि पानानि सुरभीणि च।

उपनीय सर्वमेतत्—

इति मनुवचनविरोधः स्यात्। एवम्—

ततो मधुघृताक्तं तु उष्णमन्नं तिलान्वितम्।
गृहीत्वा देवतीर्थेन प्रणवेनैव तत्पुनः॥
एतद्वो अन्नमित्युक्त्वा विश्वेदेवांश्च संयजेत्।
पितृभ्यश्च तथा दद्यादन्नमामन्त्रणेन तु॥

इति ब्रह्मपुराणवचनस्य समाधानं विज्ञानेश्वरेणापि दुःशकं स्यात्। इत्थम्—

अपि नः स कुले जायाद्यो न दद्यात् त्रयोदशीम्।
पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च॥

इति पितॄणां प्रार्थनां विफलीकुर्वन्तो मन्दभाग्याः

शोचनीयाः। न हि शूद्रस्य पायसादिना श्राद्धे योग्यताऽस्ति, आमेनैव तस्य नियमनात्। अत एव भवदेवलिखितच्छागलेयवचनम्—

वृथामांसं न भोक्तव्यमदत्त्वा श्राद्धकर्मणि।
अदत्त्वा भक्षयन् विप्रः प्राजापत्यं समाचरेत्॥

इति।अत्र मांसश्राद्धं शेषभक्षणं च ब्राह्मणस्याऽनुज्ञातमिति।

ननु मांसस्य कलिवर्ज्यतानभ्युपगमे श्राद्धे गोमांसविधायकवचनैर्निरङ्कुशैः कलावपि गोमांसं विधीयतामिति चेन्न,—

दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः।
गोत्रान्मातृसपिण्डाद्वा विवाहो गोवधस्तथा॥
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः।

इति कल्पतरुधृतब्रह्मपुराणवचनेन कलौ गोवधस्य वर्जितत्वात्। क्रयादिप्राप्तगोमांसेन श्राद्धाकरणं शिष्टविगानात्।

अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न हि।

इति याज्ञवल्क्यवचनात्। अत एव गोमाहिषमांसश्राद्धादिकं तत्रोदाहृतं कल्पतरुकृता। न चेतरमांसश्राद्धादिकमपि केषाञ्चिद्विगानादनादरणीयं स्यादिति वाच्यम्, केषाञ्चिदनाचरणेऽपि केषाञ्चिदाचारस्य सत्त्वात्। सदाचारस्तु मध्यदेशीयाचार एव। तथा च मनुः—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥

इत्युपक्रम्य—

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते॥

यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।
वर्णानां सान्तरालानां सदाचारः स उच्यते॥

इत्याद्यभिहितत्वात्। ब्रह्मावर्तब्रह्मर्षिदेशमध्यदेशाऽऽर्यावर्तेषु मांसभक्षणाचार आजानिकोऽविगीतः प्रतीयत एव। ये तु कलिवर्ज्यतया मांसश्राद्धे विवदन्ते

स्तेयान्यमहपातकनिष्कृतिरिति कलिवर्ज्यतयोक्तमपि ब्रह्महत्यातत्संसर्गप्रायश्चित्तं धनलोभादुपदिशन्ति मातृसपिण्डानयने च न विवदन्ते रागरोषदूषितचेतसो देवानां प्रियास्ते केन शिक्षणीया इत्यलं मांसं विद्विषद्भिः सौगतमतानुसारिभिः सह श्रमेणेति ॥

इति महामहोपाध्यायश्रीविद्यानिवासभट्टाचार्यात्मजविश्वनाथशर्मकृतो मांसतत्त्वविवेकः समाप्तः ।

---

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvali, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopināth Kavirāj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Raṅgoji Bhaṭṭa, Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī. Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-4

No. 6—(Pārt I)-The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-4

No. 7—( Part II ) Ditto Ditto Rs. 1-8

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya, Rs. 0-10-6

No. 9—(Part 1)–The Bhakti Chandrikā, a Commentary on Sāṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopināth Kavirāj, M.A.
Rs. 0–15

No. 10–(Part I)–The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1–2

No. 11–The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by Saṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0–9

No. 12–The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–2

No. 13–The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0–14

No. 14–The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–14

No. 15–(Part 1)–The Tripurārahasya. ( Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0–14

No. 16–The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1–2

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānāth Jhā, M. A. D. Litt. Rs. 0–14

No. 18–(Part I)–The Gorakṣa siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0–14

No. 10–(Part–II)–The Siddhāntaratna by Baladeva Vidyābhuṣaṇa.
Ed. with Introduction by Gopinath Kaviraj, M. A.

No. 15–( Part–II ) The Tripurārahasya ( Jñānakhaṇḍa ) Ed. by Gopinath Kaviraj, M. A.

THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its evolution, by Gaṅgānātha Jhā.

(b) The View point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 5

Vol. II—

(a) Paraśurāma Miśra ALIAS Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) Studies in Hindu Law (2):—its sources, by Gaṅgānāth Jha.

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha Sarmā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G.A.Jacob.

(b) Studies in Hindu Law (3) Judicial Procedure: by Gaṅgā nātha Jha.

(c) Theism Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N, Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgānātha Jhā.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda Prātiśākhya, by Maṅgala Deva Sāstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj,

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools by G.L. Sinha. Rs. 5

Vol. V.—( In progress )

To be had of—

The Superintendent, Government Press,

ALLAHABAD, U. P. (INDIA).

